① ओं श्री गणेशाय नमः सरस्वत्यैनमः नत्वासांबशिवं ब्रह्म

... ... ...

भाव्यं पक्षद्वयेपिप्रदेशीकुर्वाम्यतायाइत : प्रती

25 X 11 X 0.1 C.m.

पेज - 2 (1-2)

---

② पूर्वंउस्वयं स्वयं प्रशीर्णाः पूर्वोक्त लक्षणाः सामिद्धः पूर्ववत्

... ... ... ... ...

धनेशास्त्रस्यासामर्थ्याच्चि तस्मादहयेत्प्रासिद्धस्यैवमत्र

30 X 13 X 0.1 c.m

पेज - 2 (64, 65)

77

एकदेशस्थिता शास्त्रभवने याति दीपतां परितो व्याप्तृतां भाषां परिभाषां प्रचक्षते १

वाचनिकानीत्यस्य मध्यमणिन्यायेनोभयत्र संबंधः २ = भाष्यादिनः परिभाषार्थनि... १ =

ॐ श्रीगणेशाय नमः सरस्वत्यै नमः नत्वा सांबं शिवं ब्रह्म नागेशः कुरुते सुधीः बालानां
सुखबोधाय परिभाषेन्दुशेखरम् १ प्राचीनवैयाकरणतन्त्रे वाचनिकानि अत्र
पाणिनीयतंत्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोर्निबद्धानि यानि परिभा
षारूपाणि तानि व्याख्यायन्ते नलणइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण
ग्रहणेषु संदेहादनिर्णयात् आह व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादल
क्षणम् विशेषस्यान्यतरसाध्यर्थरूपस्य व्याख्यानात् शिष्टकृतात्प्रतिपत्तिर्निश्चयः
यतः संदेहान्न शास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न शास्त्रस्य
निर्णयजनकत्वौचित्यादित्यर्थः असंदिग्धानुष्ठानसिद्धयेऽत्र शास्त्रे संदिग्धोच्चा

आदिनान्यतमार्थस्यैकार्थः ३

च भवति व्यंजकत्वं पव्याख्यानं तच्चैकत्रैकत्र स्तत इति सूत्रस्थं
नपरकरणमकारश्चाचिरश्रवणात् इति सूत्रे भ्वोरिति निर्देशः।

प्रवर्तकत्वेनेति वर्तकत्वेन वाचारितार्थ्याभावेपि उपदेशपरंपरया।
एवं व्याख्यानेन हि ज्ञापकानुसरणक्लेशो न कर्तव्य इति ता
त्पर्यम्।

प्रतिपाद्यस्वार्थ प्रतिपादकत्वं बोध्यमित्यादि।

रण॰ सूत्रकृताचार्यव्यवहारेण संदेहनिवृत्तये व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इ
ति यावत्। तेनाणुदित्सवर्णस्य चाप्रत्यय इत्यत्र पूर्वेणाणा परेणाणा ग्रहणमिति लणसूत्रे भा
ष्यस्पष्टम्। नत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह यथोद्देशं संज्ञापरिभाषं का
र्यकालं संज्ञापरिभाषमिति उद्देशमनतिक्रम्य यथोद्देशं उद्देश उपदेशदेशो।
ऽधिकरणसाधनश्चायं यत्र देशे उच्चरितस्य तेनैव तद्देश एव वाक्यार्थबोधे न गृहीतेन शक्त्या
गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः देशश्चोच्चारणकालरूपा वा तत्र शास्त्रे व्य
वह्रियते ननु एकवाक्यार्थबोधे जाते भविष्यति किञ्चिद्दर्शनेन प्रयोजनमिति ज्ञान
मात्रेण सन्तुष्य यथाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्षो दूषितो दुरुक्तश्चैकेयतः केचित्तु

ग्रहणं

गृहीतशक्ते
तिसंज्ञापदेऽथ

वक्ष्यमाण
व्यवस्थाशि
क्षयपक्षोऽयं
पत्ने २=

विशेषज्ञानव्यावृत्तिमात्रपदेन।

ननु यथोद्देशपक्षोऽनुपपन्नो यावता कार्यकाले संज्ञापरिभा
षयोः कार्यदेशे गमनन्यायमित्यत आह।

सप्तमीनिर्देशादिघटितं
सर्वविधीत्यर्थः २=

परिभाषाभेदः २)

यथोद्देशपक्षमाश्रित्य=
पक्षद्वयेऽपि एकवाक्यतयैव नियम इत्ये
तदेवेत्यर्थः ३=

परिभाषाविषये नञ्झिनञिन्यादिवाक्यार्थबोधे सप्तमीनिर्दिष्टादिकोनिपर्यालोचना
यां संकलनन्नादिष्टुपस्थितौ तत्संकलनतत्संस्कारायत्तत्वमेवं [illegible] प्रकल्प्यैकवाक्यतयैव
नियमः कार्यकालपक्षेण त्रिपाद्यामप्युपस्थितिमात्रविशेषः एतदेवाभिप्रेत्याधिका
रोनामत्रिप्रकारकः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्व
लितः सर्वं वेश्माभिज्वलयतीति षष्ठी स्थानेयोगेति सूत्रे भाष्ये उक्तम् अधिकारशब्दे
नपारिभाष्यौ परिभाषाप्युच्यते कश्चित्परिभाषारूपइत्यादिके यदुक्तः प्रदीपो यथा प्रभा
द्वारा सर्वगृहप्रकाशकः एवमेतत्सूत्रजननद्वारा सर्वशास्त्रोपकारकमिति ता
त्पर्यम् एतच्चपदद्वयसाधारणं भाष्यं पक्षद्वयेपि प्रदेशैकवाक्यतायाइतः प्रतीः।

[illegible] तज्ञापरिभाषा भाष्यात् २
देशोगमनं कार्यकालपक्षे सा परिभाषा लाघवदेशत्यागेन
प्रदेशो विधिप्रदेशेगमनं प्रदेशाः देशरूपनाम्नो भयोः पयेव ए=

पूर्वकं स्वयंस्वयं प्रश्रीणीः पूर्वोक्तलक्षणाः समिधः पूर्ववत् उक्तप्रकारेण तस्मिन्ने वाग्नौ आधाय वाचं विसृजेत् इति तद्दिन
कृत्यं अथ तद्दिनमारभ्या समावर्त्तनात्कर्त्तव्यमुच्यते भूमौशयनं अक्षारालवणाशनं दंडधारणं अग्निपरिचरणं गुरुशुश्रू
षां भिक्षाचर्यां सायंप्रातर्भोजनार्थं भोजनसंनिधाने वारद्वयं वा भैक्षचरणमनिंद्यब्राह्मणगृहे गुर्वाज्ञयापापावित्वाभोजन
विधिना भुंजानः मधुमांसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेत् स्नंत्यतरेतु मधुमांसाजनोच्छिष्टभुक्त
शुक्तस्त्रीप्राणिहिंसनं भास्करालोकनाश्लीलपरिवादादि वर्जयेत् आदिशब्देन पर्युषितताम्बूलदंतधावनावसक्थिकादि
वासापच्छत्रपादुकागंधमाल्याहृतेनानुलेपनजलक्रीडाद्यूतनृत्यगीतवाद्यालापादीन्यन्यानपि वर्जनीयानि स्मृतानि तथाकौ
याभिक्षासदाधार्यं कौपीनं कटिसूत्रकं कौपीनमहतं धार्यं खंडं वा वस्त्रपार्श्वसूत्रकं यज्ञोपवीतमजिनं मौंजीं दंडं च धारयेत् नष्टेभ्र
ष्टे नवं मंत्रात् धृत्वा भ्रष्टं जले क्षिपेत् अष्टाचत्वारिंशं शतं वर्षाणीत्यादि अव्यवहार्या भवंतीति वचनादित्यंतमुख्यार्थ कालातिक्रमे नियम
वदित्यस्यार्थ उक्त इति कर्तव्यतात्वलिख्यते पूर्णाहुतिवदाज्यसंस्कृत्य अनादिष्टप्रायश्चित्तहोमं कुर्यात् पूर्णाहुतिर्यथा कात्यायन
सूत्रे पूर्णाहुतिं जुहोति निरूप्याज्यं गार्हपत्येधिश्रित्य स्रुक्स्रुवं च संमृज्योद्वासोन्नूयावेक्ष्य गृहीत्वारब्ध एव एवं सर्वत्र अत्रैवं प्र
योगः यदावसथिकस्य अनादिष्टं प्राप्नोति तदाग्निः संभृत एव परि निरग्नेः तदा शुद्धायां भूमौ पंचभूसंस्कारान् कृत्वा लौकिकम

ग्निं स्थापयित्वा स्थाल्यामाज्यं तूष्णीं निरूप्याग्नावधिश्रित्य स्रुवं दर्भैः संमृज्याज्यमुद्वास्य कुशतरुणाभ्यामुत्पूयावेक्ष्य स्रुवेणादायोप
रि समिधं निधायोच्छ्राय स्रुवं सव्ये कृत्वा दक्षिणेनाग्निं निष्क्रम्य समिधमाधायोपविश्य दक्षिणं जान्वाच्य ॐ भूः स्वाहेति स्रुवस्थिताज्ये
नैकामाहुतिं हुत्वा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति च त्वं नो अग्ने इत्यादिभिः पंच स्रुवेणावदायाज्याहुतीर्जुहोति इदं
नवाहुतिहोमात्मकं कर्म यत्र यत्र प्रायश्चित्तानादेशः कर्मणा नियतकालातिक्रमे वा न तत्र तत्रादिष्टसंज्ञकं प्रायश्चित्तं वेदितव्यं यथ
दा तु कस्मिंश्चित्स्थालीपाकादिकर्मप्रयोगे वर्तमाने अनादिष्टप्रायश्चित्तमापद्येत तदा तत्कर्मांगभूत एवाग्नौ तत्कृत्वा अनादिष्टं कृ
त्वा उत्तरितनप्रयोगं कुर्यात् यदा तु बहूनि निमित्तानि भवंति तदा प्रतिनिमित्तं नैमित्तिकमावर्तते इति न्यायात् यावंति निमित्तानि ता
वत्कृत्वः प्रायश्चित्तमावर्तते यथोक्तं इत्युपनयनपद्धतिः अत्र वेदब्रह्मचर्यं चरेदित्यनेन वेदाध्ययनांगतया ब्रह्मचर्याचरणमुक्तं
वेदाध्ययनारंभस्य कालः इतिकर्तव्यता च नोक्ता केवलं समावर्तनकर्मसूत्रकारेणाख्ये वेदं समाप्य स्नायादिति तत्र
वेदस्य आरंभं विना समाप्तिः कथं नु शक्येति उपनयनानंतरमेव वेदारंभस्य समय इत्यवगम्यते इतिकर्तव्यता च पुनः एतदेव
व्रतादेशनविसर्गेष्विति उपाकर्महोमातिदेशाद्व्रतादेशनेन वेदारंभे प्राप्नोति अतश्च उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व
कं वेदमध्यापयेदनेन शौचाचारांश्च शिक्षयेदिति गुरोः उपनयनानंतरं वेदाध्यायनविधानाच्च उपनयनोत्तरकालं पुण्येऽह्नि

निमात्तपूजापूर्वकं वेदारंभनिमित्तमाभ्युदयिकं श्राद्धमाचार्यो विधाय पंचभूसंस्कारपूर्वकं लौकिकाग्निं स्थापयित्वा ब्र
ह्मचारिणमाहूय अग्नेः पश्चात्स्वस्योत्तरतनुपवेश्य ब्रह्मोपवेशनाद्याज्यभागांतं कृत्वा यद्यृग्वेदमारभ्यते तदा पृथिव्यै
स्वाहा अग्नये स्वाहेति द्वे आज्याहुती हुत्वा ब्रह्मणे छंदोभ्य इत्याद्यानवाहुतीर्हुत्वा शेषं समापयेत् यदि यजुर्वेदं तदाज्यभा
गानंतरं अंतरिक्षाय स्वाहा वायवे स्वाहेति विशेषः यदा सामवेदं तदाज्यभागानंतरं दिवे स्वाहा सूर्याय स्वाहेति विशेषः
यदाथर्ववेदं तदाज्यभागांते दिग्भ्यः स्वाहा चंद्रमसे स्वाहेति विशेषः यद्येकदा सर्ववेदारंभस्तदाज्यभागानंतरं क्रमेण प्रतिवे
दं वेदाहुतिद्वयं द्वयं हुत्वा ब्रह्मणे छंदोभ्य इत्याहुतिद्वयं च हुत्वा प्रजापतय इत्याद्याः सप्त तंत्रेणाज्यं जुहुयात् अनंतरं महाव्याहृ
त्यादि स्विष्टकृदंता दशाहुतीर्हुत्वा प्राशनं विधाय पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दत्वा ब्रह्मचारिणे यथाविधि वेदमध्यापयितुमार
भेत इति व्रतादेशप्रयोगः अथ समावर्तनमारभ्यते वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं चाष्टचत्वारिꣳशकं वा वेदं मंत्रब्राह्मणा
त्मकं समाप्य सम्यक् पाठतोऽर्थतश्च अंतं नीत्वा स्नायाद्वक्ष्यमाणेन विधिना स्नानं कुर्यात् अथवा ब्रह्मचर्यव्रतं अष्टाचत्वारि
ꣳशकं अष्टाचत्वारिंशद्वर्षैर्निवर्त्यं समाप्य अवसानं प्राप्य गुरुणानुमतः स्नायादिति संबंधः द्वादशकेऽप्येके एके सूत्रकाराः
द्वादशकेऽपि द्वादशवर्षसमाप्ये तद्व्रते व्रते चरिते स्नायादिति मन्यंते तत्रापि गुरुणानुज्ञातः अत्रासूत्रितमपि उभयं वेदं व्रतं च

समाप्यवास्नायादित्यनुषज्यते यतः पूर्वस्मात्तकस्यैवैविध्यमुक्तं विधिर्विधेयः तर्कश्च वेदः वेदं समाप्येत्युक्तं तत्र क्रियानूवेद इत्य
पेक्षायामाह विधिर्विधीयते इति विधिः अग्नीनादधीत इति अग्निहोत्रं जुहुयात् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि विधाय
कं ब्राह्मणवाक्यं विधेयः विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्मांगत्वेनेति विधेयो विधिर्विधेयस्तर्कश्च वेदः यद्यप्यत्र तस्मिन् द
र्शने सति समस्तवैदिकसंहारात्मिका मीमांसापि वेदशब्दवाच्या भवतीत्यादिना तर्कपदं मीमांसापरमंगीकृत्य वार्तिककारैर्ता मीमां
साया अपि वेदत्वमुक्तं तद्विध्यादित्रयस्य वेदत्वप्रतिपादनार्थैयं स्मृतिरिति षडंगवेदत्वस्मृतितुल्यन्यायतया पूर्वपक्षसंयताभ्युपग
मेनैव तद्दृष्टान्तेन कल्पसूत्राणां छंदस्त्वाभावमुपपादयितुं न त्वेवमेव स्मृतिमाख्यानं संमतं अध्येतॄणां मीमांसायां वेदशब्दाप्रसिद्धेः
न चाध्येतृप्रसिद्धाः निरपेक्षैवेयं स्मृतिर्विध्यादित्रयस्य वेदत्वं प्रतिपादयतीति वाच्यं तथा सति तन्निरपेक्षेण स्मृतिमात्रपर्यालोचने
न तत्स्वारस्येन विध्युद्देशमात्रस्यैव वेदत्वापत्तावर्थवादादीनामवेदत्वापत्तेः विधेयत्वमग्निहोत्रन्यायविस्तरयोरपि वेदत्वापत्तेश्च अ
ध्याध्येतृप्रसिध्यनुरोधेन विधिविधेयशब्दयोर्ब्राह्मणमंत्रपरत्वान्नात्याम्नातिव्याप्तीतर्हि स्मृतिरध्येतृप्रसिद्धिसापेक्षत्वापत्तौ
कथं तर्कं तदप्रसिद्धवेदत्वप्रतिपादनपरता न च तदंशे स्वातंत्र्यं अपेक्षानपेक्षाविध्यनुवादकृतवैरूप्यापत्तेः न्यायविस्त
रातिप्रसंगानिवृत्तेश्च व्यवहारानुप्रविष्टपदार्थनिर्णये तद्विरोधेन शास्त्रस्यासामर्थ्याच्च तस्मादध्येतृप्रसिद्धस्यैव मंत्र